# अनलागम

## अनलागमे पवित्रारोहणविधिः

वागीशाद्यास्सुमनसः सवार्थानामुपक्रमे
यं नत्वा कृतकृत्या स्युस्तं नमामि गजाननम्
हरिः ओं श्रीगुरुभ्यो नमः
पवित्रोत्सवं प्रवक्ष्यामि शृणुष्वेव षडानन
सर्वमासेषु कर्तव्यं चान्द्रमासेषु संयुतम् १
वर्जयेद्विरोचनो मासं भौमन्तः षडानन
सुवारे सुतिथौ ऋक्षे सुमुहूर्ते सुलग्नके २
कार्पासबीजं सङ्गृह्य महाराज्ये त्रिपादिषु
ऐशे वा सौम्यदेशं वा मही सेचनखातके ३
श्वेतशालीं समोपेतं श्वेतकार्पाससम्युतम्
शुद्धशालिसमं मिश्रं शुक्लकार्पाससम्युतम्
मुखद्रोणं हृदिद्रोणं गुणचन्द्रसुपूरितम् ४
पञ्चसप्त क्षिपेत्पात्रे पायसेन समन्वितम्
श्यामळा द्विभुजां बालान्तन्त्रिनाद विनोदिताम् ५
अभ्यर्च्य गन्धपुष्पाद्यैर्नाळिकेरन्निवेदयेत्
तद्रसं पृथिवी सेच्य नैवेद्यं हृदयेन तु ६
द्विभुजं पीतवर्णञ्च द्विनेत्रं लोकधारिणम्
तत्तत्सर्वेषु रूपेषु पृथ्वीव्रतं विचिन्तयेत् ७
तद्बीजं संक्षिप्तेद्भूम्यां धूपदीपसमन्वितम्
अस्त्रदेवं सहोपेतं तद्भूमिं भ्रामयेत्त्रिधम् ८

References:
Pavitrārohaṇavidhi, pp. 1-7: *Analāgama*—Manuscript Nos. T0229, T0247c, and T0829 of the Muktabodha on-line digital library, displaying the paper transcripts of the French Institute of Pondicherry.
Japavidhi, p.7: *Analāgama*—Manuscript No. T0829 of the Muktabodha on-line digital library, paper transcripts of the French Institute of Pondicherry.
Aṣṭabandhanavidhi, pp.7-17: *Analāgama*—Manuscript No. T1039 of the Muktabodha on-line digital library, paper transcripts of the French Institute of Pondicherry.
Dvārādidvajanaimmittika, pp. 17-18, *Analāgama*—Manuscript No. T0990 of the Muktabodha on-line digital library, paper transcripts of the French Institute of Pondicherry.

देवालयं समासाद्य वसुधा तु रसोर्ध्वके
विघ्ने चण्डेश्वरोपेतं पूजयेत्तु गणेश्वरम् ९
ग्रामप्रदक्षिणं कृत्वा पूर्ववद्वनमाश्रिते
पुण्याह प्रोक्षणं कृत्वा तमृक्षस्यार्चनक्रमम् १०
तद्ब्रह्म वृक्षदैवत्यं तद्बीजं विष्णुदैवतम्
तत्सारं रुद्रदेवेषु तल्लयं भावनेषु च ११
तत्तत्सारै महातन्त्र ग्रहमेवं षडानन
स्थापने ब्रह्ममन्त्रेण सेचने विष्णुसम्युतम् १२
छेदनैस्संहरो मन्त्रैर्नैवेद्यं फलमिक्षुकैः
धूपदीपक्रिया भ्राम्यश्शडालुस्सङ्ग्रहेत्वने १३
देवालयं समासाद्य भोगशक्त्या प्रदापयेत्
ब्राह्मणे नवकन्यां वा स्नापये +++++ १४
+++++++++++++ वस्त्रधेनुं प्रदापयेत्
तद्द्रव्यं दापयेद्गौरीं नवशक्तिं सुयोजयेत् १५
कार्पासतन्तु सङ्ग्राह्य सेचयेत्तु दिनत्रये
प्रासादाग्रेषु कर्तव्यं तिलकं बिल्वकाष्ठकैः १६
रक्ततन्तु परिग्राह्य भ्रामयेच्छङ्कुमूर्धसु
रक्तचन्दनसम्युक्तं ग्रन्थिरष्टादशान्वितम् १७
गङ्गावतारसङ्ख्येषु कङ्कणत्रयमेव च
सितकार्पाससम्युक्तं शिरोमानं तथैव च १८
विंशद्ग्रन्थि समोपेतं शतदिक्तन्तु सङ्ख्यये
शुद्धचन्दनसम्मिश्रं तद्ग्रन्थि द्वयतन्तुषु १९
वर्जयेद्दीप्तके देवी रजनीकालमाचरेत्
सुमुहूर्ते सुलग्ने तु अङ्कुरार्पणमाचरेत् २०
ऐशान्ये सौम्य देशे वा मण्डपं चतुरश्रकम्
षट्त्रिंशद्धस्तमायामं चतुर्द्वारसमन्वितम् २१

मध्ये वेदि पदं कृत्वा दर्पणोदरसन्निभम्
चतुर्दिक्षु चतुर्वक्त्रं ऐशान्ये बिन्दुरग्निषु २२
पञ्चाग्निं विधिवत्प्रोक्तं स्थापनं शिल्पिकोपमम्
कदळी स्तम्भसंयुक्तं चतुस्तोरणभूषितम् २३
मुक्तादामोरलङ्कृत्य पुष्पमालैरलङ्कृतम्
आयुधाष्टासु मङ्गळ्यैश्चतुर्दिक्षु प्रतिष्ठितम् २४
गोमयालेपनं कृत्वा मार्जनः प्रोक्षणे मनु
पुण्याहं प्रोक्षणं कृत्वा यागवास्तु शतं हुनेत् २५
वेदिकोर्ध्वे न्यसेद्विद्वानष्टद्रोणैश्च शालिभिः
दर्पोष्टकसमोपेतं विचित्रकेसरान्वितम् २६
रेखाग्रे तण्डुलं सिच्य तिललाजैस्सुपुष्पकैः
विष्टरब्रह्मतद्वृक्षे दर्भकूर्चोपमालिकैः २७
द्रोणमृधजले कुम्भै शिवपूर्णन्तु वर्द्धनीम्
लक्षणैस्सङ्ग्रहेद्विद्वान् वर्जयेत्स्फोटकादिषु २८
चतुर्दिक्षु चतुर्वक्त्रे ब्रह्मविष्णु हरं शिवम्
मध्ये सदाशिवं कुम्भं ऐशान्ये वर्द्धनी सह २९
पञ्चतत्वाधिपो वक्त्रै स्वयंभुस्सद्य सात्विकम्
निवृत्तिं कलामयोपेतं जातमीश्वरपश्चिमे ३०
प्रतिष्ठा वामदेवेशीं पुरुषोत्तमकारणम्
राजसङ्घोरविद्येषु रुद्रकारणदक्षिणम् ३१
शान्तिं महेश्वरोपत्यं पुरुषं वायुसम्पुटम्
व्योमाकारं सुवृत्तञ्च बिन्दुशक्ति विभूषितम् ३२
शान्त्यातीतेश मूर्द्धानामधिदेवं सदाशिवम्
अभ्यर्च्य गन्धपुष्पाद्यैर्विदिक्षुन्नाटिकाश्रितम् ३३
हृदयं घोररूपेषु शिरोवामस्य रूपिणम्
शिखासद्येषु तद्भेदं शिखां पुरुषरूपिणम् ३४

नेत्र कर्मकमीशानं भावयेत्तु षडानन
अभ्यर्च्य गन्धपुष्पाद्यै भूतशुध्यन्तरीयताम् ३५
अर्चयेत्पञ्चवक्त्रेण हृदयादिचतुष्टयम्
अभ्यर्च्य गन्धपुष्पाद्यै नैवेद्यं धूपदीपकम् ३६
पञ्चावरणमार्गेण पूजयेत्कुम्भदैवतम्
चतुर्दिक्षु चतुर्द्वारं वेदवेदेषु गण्डकैः ३७
कलासङ्ख्येषु संप्रोक्ष्य गळितं पूर्णकुम्भवत्
चूताश्वत्थदळोपेतं नाळिकेरफलान्वितम् ३८
वस्त्रेणावरणैर्माल्यैश्शिवकुम्भादि गडुकैः
स्थापयेत्तु चतुर्दिक्षु षोडशं कुम्भसंस्थितम् ३९
वेदिका स्नापयेत्कृत्वा शुद्धशैवं विशेषतः
पादप्रक्षाळनं कृत्वा सामान्यार्घ्यं प्रकल्पयेत् ४०
द्वाराग्रे तु प्रकर्तव्यं सौम्याननमेव च
प्राचीनमर्चयेद्देवं सौरं वा नन्त सूक्ष्मसु ४१
सोममभ्यर्च्य धूपञ्च दीपेनैव समर्चयेत्
दक्षिणे कुम्भ वेद्येषु धिपोक्तमब्जेकत्रेकम् ४२
ब्रह्मविष्णुं समभ्यर्च्य वारुणे रुद्रमीश्वरम्
एकरुद्रत्रिमूर्तीषु सौम्यदेशं समाश्रितम् ४३
सदाशिव पराशक्तिं श्रीकण्ठञ्च शिखण्डिनम्
रूपध्यानेषु मन्त्रेषु स्वस्वनाम्ने विशेषतः ४४
विशेषार्घ्याहितोपेतं भूतशुध्यन्तरीयतम्
वेद्योर्ध्वे पञ्चवक्त्रेण पूर्वोक्तविधिना सह ४५
पूर्ववक्त्रन्तु कुम्भे वा स्थापयेच्छिवसन्निधिम्
वायौकदण्डाद्यैः दन्तकाष्टं च कुङ्कुमम्
भस्मचन्दनपुष्पेषु राक्षसेत्स्थापयेत्तथा ४६
होमद्रव्याणि सर्वेषु अग्निकोणे प्रतिष्ठितम्

होमकर्माणि कुण्डेषु इत्यर्थद्रव्यसंयुतम् ४७
शुद्धशैवस्यपि विप्रश्च सशिवब्राह्मणो विधिः
प्रधानकुण्डमाश्रित्य सहस्रशतमेव च ४८
प्रेत्येकस्य सहस्रञ्च सहस्रं पञ्च वह्निषु
प्राधान्यैरीशवक्त्रेषु होमयेत्परमेश्वरीम् ४९
पञ्चवक्त्रेषु कुण्डेषु प्रत्यहं कुम्भदेशकम्
कुम्भवेदेषु सम्योज्य पञ्चाग्निं समयोजनैः ५०
पञ्चब्रह्म षडङ्गैश्च शुद्ध्यर्थं होमयेच्छतम्
पूर्णाहुतिं क्षिपेत्कुण्डे धूपदीपसमन्वितम् ५१
रात्रिजागरवस्त्रं तु रात्रिशेषं व्यपोहयेत्
प्रभाते विधिवत्स्नात्वा जपतर्पणतत्परैः ५२
यागपूजां समभ्यर्च्य पूर्वोक्तविधिना सह
पवित्राणि समुद्धृत्य प्रासादन्तु प्रदक्षिणम् ५३
आचार्यदक्षिणे हस्ते बन्धयेदस्त्रमन्त्रतः
सोमास्कन्देश्वरं कृत्वा रक्षाबन्धनमेव च ५४
मूललिङ्गे समाश्रित्य पवित्रन्दापयेद्बुदा
गङ्गावतार तत्त्वेषु कङ्कणत्रयमेव च ५५
पञ्चावरण मार्गेण पूजयेत्परमेश्वरम्
नृत्तरूपादि भेदेषु पवित्रन्दापयेत्प्रभाः ५६
वीरभोगादि शक्तीञ्च दापयेत्परमेश्वरीम्
एकभस्मादिचूर्णञ्च मिश्रितं शुद्धतन्तुषु ५७
अपरे दिवसे देवं दापयेत्सर्वदेवसु
पवित्रं द्वयमीशानं दापयेत्परमेश्वरम् ५८
एकाहं दिनवाक्यान्तं यागपूजां विशेषतः
नैवेद्यं धूपदीपञ्च यागद्वारे विशेषतः ५९
पायमाचमनञ्चार्घ्यं धूपदीपसमन्वितम्

लाजोपकरणं कृत्वा त्र्यम्बकेन समन्वितम् ६०
उच्चरेत्खण्डपादेषु नृत्तगीतसमन्वितम्
एककालं द्विकालं वा भ्रामयेच्चण्डबिम्बवत् ६१
पूर्वार्धदिवसे स्नानं सहस्रकलशान्वितम्
ततः पूर्वदिनान्तञ्च पूजाहोमभ्रमेण वै ६२
शान्तिहोमं हुनेत्कृत्वा मूर्तिहोमं सहस्रकम्
दिशाहोमं हुनेत्पश्चात् पूर्णोत्सवमथाचरेत् ६३
त्रिशूलेन सहोदेवं नदीतीरे जलाश्रयम्
स्नापयेत्स्नापनैर्युक्तं जनसङ्ख्या सहस्रकम् ६४
आलयन्तु पुनर्गत्वा पूर्वोक्तविधिना सह
यागदेवान्समभ्यर्च्य पूर्णाहुतिं हुनेत्सदा ६५
द्वारदेवान् विसृज्येषु कुम्भाभिषेकमाचरेत्
पञ्चकुम्भैस्तथा वह्नि पञ्चाग्निं योजयेद्धृतिः ६६
अन्तर्बलिं क्षिपेत्क्षेत्रं वटुकनाथं प्रपूजयेत्
मूर्तिकुम्भान् समुद्धृत्य प्रासादप्रदक्षिणं विधिः ६७
गर्भगृहं समासाद्य स्नपनं पञ्चविंशतिः
मूर्तिकुम्भं न्यसेन्मूर्ध्नि शक्तिकुम्भन्तु पिण्डका ६८
दिशाकुम्भे दिशासेच्यं पवित्राणि विसृज्य च
खण्डत्रयन्निवेद्यञ्च निर्माल्यञ्च न सङ्ग्रहेत् ६९
विप्रक्षोणि भुजो भक्तैराचार्यश्शिष्य एव च
दापयेद्राजराष्ट्रञ्च भयचक्रात् भयप्रदम् ७०
गन्धानि निर्दहेत्पूतन्तदग्न्यादिषु निक्षिपेत्
प्रतिसंवत्सरं कृत्वा पूजानिष्कृतिशान्तिकम् ७१
राजराष्ट्रं विनश्यन्ति पुनरुत्सवमाचरेत्
शान्तिहोमशतं हुत्वा मूर्तिहोमं शतं हुनेत् ७२

इत्यनलागमे क्रियापादे पवित्रारोहण द्वाविंशत्पटलः

# अनलागमे जपविधिः

शिवसूक्तन्तथाचैव दुर्गासूक्तन्तथोपम
रुद्रसूक्तं स्कन्दसूक्तं पूर्वभागे जपेद्बुधः १
श्रीसूक्तं पवमानञ्च नरसूक्तं त्रियम्बकम्
शान्तिद्वय जपेद्धीमान् दक्षिणे तु विशेषतः २
कल्पसुक्तं शन्नवर्गं विष्णुसूक्तञ्च वारुणम्
पश्चिमे तु जपेद्धीमान् पवमानं हिरण्यकम् ३
देवव्रतं पुरुषव्रतं जेष्टासमरन्तरम्
कयानश्चिव्रकञ्चैव विरूपाक्षञ्चोत्तरे जपेत् ४
शैवं शिवास्त्रं क्षुरिकास्त्रञ्च व्योम प्रत्यङ्गिरास्त्रकम्
पाशुपतञ्चास्त्रपञ्चैते पञ्चास्त्रञ्चैव कीर्तितम् ५
शैव भूसुरमाहूया शैवमन्त्रं समुच्चरन्
ह्रस्वदीर्घं प्लुतञ्चैव प्रासादन्त्रिविधं भवेत् ६
शिवशक्तिसमायुक्तं पञ्च प्रासादमुच्यते
सकळनिष्कळञ्चैव सादाख्यन्त्रिविधं भवेत् ७
दिनं प्रतिविशेषेण त्रिसहस्रं जपेत्क्रमात्
जपकान्दक्षिणा दातु निष्कलं दापयेत्पृथक् ८
इति अनलागमे जपविधिश्चोक्तपटलः

# अनलागमे अष्टबन्धनम्

## मृत्युञ्जयभट्टर

अतः परं प्रवक्ष्यामि अष्टबन्धविधिक्रमम्
आत्मार्थं च परार्थं च लिङ्गं द्विविधमुच्यते १
आत्मार्थं तु चरं प्रोक्तं परार्थं तु स्थिरं भवेत्
चरलिङ्गविधानेन सद्यः काले समाचरेत् २

आचरेत्तु विना पूजा तत्पूजा निष्फला भवेत्
स्थिरलिङ्गविधानज्ञो मासं पक्षं शुभावहम्
स्थिरं च स्थावरं चैव जङ्गमं च त्रिधा भवेत् ३
स्थिरस्थावरमेवोक्तं परार्थं चैव कीर्तितम्
जङ्गमं त्वितिविख्यातं आत्मार्थं च परार्थकम् ४
जङ्गमं लिङ्गमेवोक्तं वारं पक्षं दिनं विना
दिव्यं स्वायम्भुवं पूर्वं आर्षकं बाणलिङ्गकम् ५
एवं पञ्चविधं लिङ्गं सप्तलिङ्गमथोच्यते
स्वयम्भुर्दैविकं चैव आर्षजं गाणपं तथा ६
राक्षसं बाणलिङ्गं च मानुषं लिङ्गमुच्यते
सप्तलिङ्गमिति ख्यातं लिङ्गमेकादशं शृणु ७
दिव्यं स्वायम्भुवं पूर्वं देवता गाणपं भवेत्
आसुरं सुरलिङ्गं च आर्षकं राक्षसं तथा ८
मानुषं बाणलिङ्गं च लिङ्गमेकादशं भवेत्
वसन्तकाले संप्राप्ते दिव्यमासत्रिधेषु च ९
दैविकं गाणपं लिङ्गं श्रावणे सम्यगाचरेत्
सुराख्यं राक्षसं लिङ्गं तुला वृश्चिकमासयोः
आर्षमासुरकं चैव मानुषं बाणलिङ्गकम् १०
एवं चतुर्विधं लिङ्गं पुष्यमासे तु कारयेत्
वने वा पर्वताग्रे वा शरत्काले विशेषतः ११
एभिर्लिङ्गद्वयेनैव वर्षदोषो न विद्यते
कालादि क्रमणे नैव कालं पक्षं दिनं शुभम्
स्थितस्थापनमार्गेण अष्टबन्धं च कारयेत् १२
अष्टाष्टशतसाहस्रमुत्तमोत्तम वे च व
तदर्धं वा तदर्धं वा तदर्धार्धमथापि वा १३
द्रव्यमेतैश्च सङ्ग्राह्य कारयेद्विधिपूर्वकम्

वृशिके च तुला मासे योजयेत् सुदृढं हृदा १४
चैत्र वैशाखयोः सिंहे कारयेत्तु विचक्षणः
शुभवारादिभिर्युक्ते शुभनक्षत्रसंयुते १५
द्वितीया च तृतीया च पञ्चमी षष्ठी सप्तमी
दशम्येकादशी चैव त्रयोदश्यां शुभावहम् १६
शुभयोगे शुभे लग्ने दृष्टि प्रा समन्विते
द्रेक्काणहोरवेलायां शोधयेत्तान् विचक्षणः १७
घनघोषादि शालायां कारयेच्छिल्पिभिः सह
अष्टहस्तादि हस्तान्तं कुण्डं कृत्वा यथाक्रमम् १८
अष्टाष्टस्तम्भसंयुक्तं द्वात्रिंशत्स्तम्भसंयुतम्
उत्तमत्रयलिङ्गानां मण्डपं द्विविधं भवेत् १९
षट् त्रिंशस्तम्भसंयुक्तं मध्यमत्रयमेव च
कन्यस त्रिसंयुक्तं षोडशं द्वादशं भवेत् २०
दशाष्टहस्तसंयुक्तं दश सप्तकरेषु च
षोडशस्तम्भसंयुक्तम् उत्तमत्रयमेव च २१
पक्षहस्तं मनुहस्तं त्रयोदशमथापि वा
मध्यमत्रयमेवोक्तं मण्डपं चतुरश्रकम् २२
कन्यसत्रयमेवोक्तं द्वादशादिभि बाणकैः
कूटं वापि प्रपां वापि मण्डपं समलङ्कृम् २३
सौवर्णं रजतं ताम्रं सी संवार सबन्धकम्
एकबन्धमिति विख्यातं पञ्चबन्धमथ शृणु २४
श्वेतगुल्गुलुशर्करचूर्णयोर्माहिषं नवनीतकमिश्रतम्
लूखले मुसलद्वय कुट्टनात् पाकयुक्तिवशाद् दृढबन्धम् २५
लाक्षा सज्जरपाषाणां शङ्खं च कदलीफलम्
मधूच्छिष्टसमायुक्तं पञ्चबन्धनमुच्यते २६
कार्पासतूलमहिषाज्यसुशर्कराणां

लाक्षा मधूच्छिष्टसुकुन्दुष्कम्
काषाय पाषाणगुलं समानं
लिङ्गस्य पीठविवरेष्टबन्धनम् २७
कदली शङ्खचूर्णं च तथा लाक्षा च गुल्गुलुम्
शर्करा मधुसंयुक्तं शर्करामधुसंयुक्तं कार्पासं तैलमेव च २८
एतानि बन्धयेत्तत्र अष्टबन्धनमुच्यते
शङ्खचूर्णं तिलं चैव त्रिफलं शर्करान्वितम् २९
कदली दधिसंयुक्तं सुपक्वं चाष्टबन्धनम्
काषायमेकं दृष्टचूर्णमेकं द्वयं च लाक्षा त्रयगुल्गुलुं च
मधू च एकं शर शर्करा च तूलं च एकं नवनीतमिश्रम् ३०
त्रीणि गुल्गुलु शर्करबाणयुक्
माहिषं नवनीत सुमिश्रतम्
लूखले मुसलद्वयघट्टनात्
पाकचिक्कणवत्सुदृढं हृदा ३१
लाक्षाद्वयं शर्करपञ्चकेन
शङ्खं मधूच्चिष्टस्कृत्सकृ च
रम्भाफलमुलूखलघट्टनं च
अपक्व पक्वेन सुयोजनीयम् ३२
नालिकेरजलेनैवा कारयेत् सुदृढं बलम्
कणं च पदमारोप्य चिक्कणं च तथैव च
कणचिक्कणमेवोक्तमष्टबन्धं च कारयेत् ३३
अष्टाश्ररन्ध्रयोर्मध्ये स्थापयेत्तु हुताशन
नवनीतं गुल्गुलुं च मधुकाधमेव च ३४
शर्करा च शिलाचूर्णं मधूच्छिष्टं तथैव च
कार्पास तूलं लाक्षा च जातिलिङ्गं विशेषतः ३५
हरीतकी च शङ्खं च कदली कटुशर्करा

दधी च तिलमेवोक्तं गुलं चैव प्रकल्पयेत्  ३६
एतैश्च षोडशद्रव्यैः अष्टबन्धनमाचरेत्
नैर्ऋते नवपदे मध्ये वेदीं कृत्वा विचक्षणः  ३७
स्थण्डिले नवपदं लिख्य शालिभिर्विमलैः शुभैः
तण्डुलैस्तिललाजैश्च मध्ये वस्त्रं प्रसारयेत्
नवनीतं च तन्मध्ये तत्पूर्वे गुल्गुलुं न्यसेत्  ३८
दक्षिणे च गुलं स्थाप्य काषायं चोत्तरे न्यसेत्
पश्चिमे शर्करान्न्यस्य शिला चूर्णं शिखिन्यसेत्  ३९
नैर्ऋते च मधूच्छिष्टं वायौ कार्पासतूलकम्
लाक्षां चैव तु ऐशान्यां स्थापयेद्विधिपूर्वकम्  ४०
इन्द्रईशानयोर्मध्ये जातिलिङ्गं न्यसेत्ततः
हरीतकी च शङ्खं च कदली कटुशर्करा  ४१
दधी च तिलमेवोक्तं मधु चैव प्रकल्पयेत्
आग्नेर्या दिशिपर्यन्तं द्वौ द्वौ द्रव्याणि विन्यसेत्  ४२
अश्वत्थसारं वटवृक्षसारम्
औदुम्बरं प्लक्षरसं च सारम्
कपित्थ बिल्वाम्रपलाशसारं
सङ्ग्राहयेदष्ट तु मृत्तिकां च  ४३
एतद्वा त्रिंशद्रव्याणि सङ्गृहेत्तु हुताशन
नदीतीरे तटाके च गजश्रिङ्गस्थिता गवाम्  ४४
पर्वताग्रे च वल्मीके कर्कटे कीटकी ग्रहे
गुञ्जा त्रयेण सारेण कपित्थ रससेचनम्  ४५
आमलीफलचूर्णं स्यात् तिन्त्रिणी बीजसंयुतम्
जाति जापत्रचूर्णं स्याल्लवङ्कमेलचूर्णकम्  ४६
कर्पूरकुङ्कुमं रोच्यं कस्तूरी मृगमदं तथा
नालिकेराजि न क्षिप्तभूत वा स फलानि च  ४७

समूडजाषकं पेष्यतैर्वस्तु सु समिश्रितम्
धातुद्रव्यं षडेतानि सङ्ग्रहे द्विधिपूर्वकम् ४८
अष्टाष्टद्रव्यं सङ्ग्राह्य अष्टाश्र स्नानस्निग्धये
अष्टाष्टानन्तरं गम्यमष्टोत्तरमथ शृणु ४९
दशमूलं दशत्वग्दशपत्रं दशाफलम्
जपापुष्पं च पत्रं च मूलं चर्म सुयोजयेत् ५०
एतैरष्टोत्तरद्रव्यैर्युक्ति युक्तेन योजयेत्
प्रथमं द्रव्यसंक्लीप्तिः द्वितीयं कालसङ्ग्रहम् ५१
तृतीयं वास्तु शुद्धि स्यात् चतुः सङ्गृहमृत्तिका
पञ्चममङ्कुरं प्रोक्तं षष्टं परिसरं भवेत् ५२
बालस्थानं भवेत्सप्तलिङ्गशुद्धिस्तथाष्टमम्
शाला प्रवेशं नवममग्निकार्यमथो दश ५३
द्रव्याधिवासनं पश्चाद्द्रव्यश्लिष्टं द्वादश
त्रयोदशमुलूखलं स्याद्धट्टनं च चतुर्दश
लिङ्गपीठान्तरे योज्य पञ्चादशमिहोच्यते ५४
त्रिखण्डं शोधयेत्कृत्वा तत्वतत्वेश्वरान् न्यसेत्
शृति मूर्तीश्वरान् न्यस्य मन्त्रन्यास मथः परम्
अन्तर्मात्रयान्यस्य बहिर्मातृकया न्यसेत् ५५
अष्ट त्रिंशत्कलान्यासं मकुटादिक्रमं न्यसेत
विद्या देहं च संकल्प्य मूलेनावा हयेच्छिवम्
यागशालां प्रवेश्यथ आचार्यान् मूर्तिपान् सह
द्वारस्थान् द्वारपालांश्च अर्चयेद्विधिपूर्वकम् ५६
बालस्थानं समभ्यर्च्य मूलं यागेशमर्चयेत्
बालस्थानं विना पूजा मूलस्थानं न शक्यते ५७
इष्टिकादारुभिश्चैव भित्ति चित्रपटेषु च
मण्डले च क्रमेणोक्तं दर्पणे खड्गकुम्भयोः ५८

एवं दशविधं प्रोक्षं बालस्थानं प्रकल्पयेत्
इष्टिकायां त्रिभिर्वर्षैः दाशै चैव द्विवर्षकम् ५९
भित्तौ संवत्सरेणैव चित्रे षाण्मासमेव च
त्रिमासं पदमेवोक्तं मण्डले मण्डलं तथा ६०
षट्त्रिंशच्चक्रमेवोक्तं दर्पणे मासमेव च
मासार्धं खड्गमेवोक्तं मासं वै कुम्भपूजनम् ६१
एवमादिक्रमेणैव बालस्थानं प्रपूजयेत्
अशक्ताशक्तविषये साधनेनैव कारयेत् ६२
एकाशीति दिनैर्वापि पञ्चचत्वारिभिः दिनैः
सप्तविंशतिभिः कुर्यादत्तमादित्रयं तथा ६३
पञ्चचत्वारिभिर्वाथ षट् त्रिंशत् सप्तविंशतिः
मध्यमत्रयमेवोक्तं कनीयत्रयमुच्यते ६४
एकाग्निश्चेत् प्रकुर्वीत पूर्वे वा दक्षिणेऽपि वा
पश्चिमे चोत्तरे वापि कारयेदीशकेऽपि वा ६५
लिङ्गपीठाकृतिं कुर्याद्वृत्तकुण्डं प्रधानकम्
वृत्तं चेद्वृत्तकं सर्वं एतेषामश्रमेव वा ६६
दर्पणोदरवत्कुर्यात् कुण्डं वै सर्वलक्षणम्
अग्निस्थं देवमभ्यर्च्य तत्तद्दिगीशमन्त्रकैः ६७
नवाग्निं वाथ पञ्चाग्निम् एकाग्निमथवाचरेत्
लिङ्गस्य चलनार्थाय पीठस्य चलनाय च ६८
तद्दोषशमनार्थाय प्रायश्चित्तं हुताशन
शिवास्त्रं क्षुरिकास्त्रं च व्योमप्रत्यङ्गिरास्त्रकम् ६९
पाशुपतं च पञ्चैते पञ्चास्त्रं चैव कीर्तितम्
व्योमव्यापि महाव्योममन्त्रं मूलमसीषु च ७०
अघोरमनुना चैव होमयेत्तु क्रमात् सुधीः
कुण्डं प्रति विशेषेण अष्टोत्तरसहस्रकम् ७१

तदर्धं वा तदर्धं वा तदर्धार्धमथापि वा
जहादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्
एकाशीति दिनैर्वापि पञ्चचत्वारिभिर्दिनैः ७२
सप्तविंशतिभिः कुर्यादुत्तमादि त्रयस्तथा
पञ्चचत्वारिभिर्वाथ षट्त्रिंशत् सप्तविंशतिः ७३
मध्यमत्रयमेवोक्तं कनियत्रयमुच्यते
नवाहं वाथ सप्ताहं पञ्चाहं वा दिनत्रयम् ७४
एकाहं वा प्रकुर्वीत कारयेद्विधिपूर्वकम्
स्थालीपाकविधानेन पूर्वोक्त विधमाचरेत्
तद्भागेन त्रिधा भज्य एकभागं घृतप्लुतं
द्विभागं मधुघृतं क्षीरं गुलेनैव तु मिश्रितम्
यागकुम्भाग्नि नैवेद्यमन्तर्बलि बहिर्बलिः ७५
केवेलेन घृते नैव आचार्यो मूर्तिपैः सह
भुञ्जीत यागशालान्तं क्षीरं भूत्वा जितेन्द्रियः ७६
आचार्यं पूजयेत्तत्र यथा विभव संयुतम्
उष्णीषमुत्तरीयं च परिधानं तथैव च ७७
हेमाङ्गुलीयरक्तं च गन्धपुष्पं तथैव च
कटकं कुण्डलं हेमसरं केयूरहारकम् ७८
कटकं कटिसूत्रं च आचार्यस्य प्रदापयेत्
आचार्यदक्षिणा हेमकनीया शतनिष्ककम् ७९
मध्यमा द्विगुणा तस्य उत्तमात्रिगुणा भवेत्
एवं संपूज्य विधिवत् सवत्साङ्गां च दापयेत् ८०
भूमिं खट्वाङ्गशय्यां च दासिदासग्रहं गजम्
दत्वाचार्यमनस्तुष्टिः देवस्य प्रीति कारणम् ८१
आचार्यस्य मनक्षोभे देवसान्निध्यकं न हि
मूर्तिपानां प्रथग्वस्त्रैः हेमनिष्कं च दापयेत् ८२

परिचारकमाहूय सोष्णीषं चोत्तरीयकम्
हेम यज्ञोपवीतं च हेमाङ्गुलीयकेन च  ८३
निष्कमेकं प्रदातव्यं परिचारकहस्तयोः
कुण्डसमीपमासाद्य आचार्यो मूर्तिपैः सह  ८४
पूर्णाहुतिं च कर्तव्यं तत्तत्कुण्डमनुं स्मरन्
तत्तन्मूर्तिं समादाय कुम्भमूर्तौ सुयोजयेत्  ८५
सुमुहूर्ते तु सुलग्ने तु शोधयेत्तद्विचक्षणः
यात्रादानं कर्तव्यं दशदानं च कारयेत्  ८६
लग्नापेक्षाय दातव्यं भूरियुक्तांश्च भूसुरान्
जापकानां दक्षिणा तु निष्कैका तु जनं प्रति  ८७
नमकं चमकं चैव पुरुषसूक्तं तथैव च
पञ्चशान्तिं पवमानं ऋग्गेजुस्सामवेदयोः  ८८
चतुर्द्वारबहिस्स्थित्वा जपेद्युग्मं च भूसुराः
शैव भूसुरमाहूय शैवमन्त्रं समुच्चरन्  ८९
ह्रस्वदीर्घप्लुतं चैव प्रासादं त्रिविधं भवेत्
शिवशक्तिसमायुक्तं पञ्चप्रासादमुच्यते  ९०
सकलं निष्कलं चैव सादाख्यं त्रिविधं भवेत्
एवमष्टविधं मन्त्रं प्रासादमिति कथ्यते  ९१
पञ्चब्रह्मषडङ्गैश्च आसनं मूर्तिमूलयोः
विद्या देहं मनेन्मन्या षोडशं मन्त्रमुच्चरन्  ९२
व्योमव्यपि महाव्योम बिजमुख्यास्त्रपञ्चकम्
एद्वं शैव विधिर्मन्त्रं जपं कृत्वा हुताशन  ९३
द्वारान्तस्थान् चतुर्द्वारान् द्वात्रिंशच्छेव भूसुरान्
दिनं प्रति विशेषेण त्रि सहस्रं जपेत्क्रमात्  ९४
जापकान् दक्षिणान् दत्वा एकनिष्कं च दापयेत्
पुनर्यात्राख्यदानं च दशदानं च कारयेत्  ९५

भक्तानां दासि दासानां यथा शक्तिं च दक्षिणाम्
शान्तिकुम्भाम्भसा प्रोक्ष्य बालकुम्भाभिषेचनम् ९६
यागकुम्भं समुद्धृत्य परिचारकमूर्ध्नि
वर्धनीं च समादाय आचार्यः पुरतः क्रमात् ९७
मूर्तिपाः अष्टकुम्भांश्च क्रमात् पूर्वादिषु क्रमात्
धामप्रदक्षिणं कृत्वा लिङ्गमूर्ध्न्यभिषेचयेत् ९८
पीठाभिषेकं वर्धन्या परिताष्टघटानि च
पायसान्नं निवेद्याथ ताम्बूलं तदनन्तरम् ९९
धूपदीपं तथा शम्भोः कर्पूरं दीपमाचरेत्
सहस्रशङ्खं संस्थाप्य पूर्वोक्तविधिवत्क्रमात् १००
दिव्यपञ्चामृतं चैव सङ्गृहेत्तान्विचक्षणः
गन्धतैलादिभिः द्रव्यैः सङ्गृहेत् विधिपूर्वकम् १०१
महाभिषेकं कर्तव्यं महाहविर्निवेद्य च
पाद्यमाचमनं चार्घ्य मुदकेन प्रदापयेत् १०२
धूपदीपौ ददौ शम्भो रा रात्रिकं च कारयेत्
दर्पणच्छत्र चामर्यां व्यजनं तालवृन्तकम्
मन्त्रपुष्पं समभ्यर्च्य चुलुकोदकमेव च १०३
स्तोत्रगीतं च नृत्तं च वाद्यं चैव तु कारयेत्
भरतोक्त क्रमेणैव कारयेच्छम्भुसन्निधौ १०४
महाभिषेकं कर्तव्यं मण्डलाष्टकमुत्तमम्
ब्राह्मणान् भोजयित्वान्ते आशिषो वाचयेत्ततः १०५
मण्डलान्ते महेशस्य उत्सवं कारयेत्सुधीः
आचार्यादींश्च सन्तोष्य वस्त्रभूषणवाहनैः १०६
यागोपकरणान् सर्वानाचार्याय प्रदापयेत्
एवं यः कुरुते मर्त्यः सपुण्यां गतिमाप्नुयात् १०७
इत्यनलागमे अष्टबन्धनविधिपटलः

# द्वारादिध्वजनैमित्तिकः

देवागारोद्धरे जीर्णे नव दण्डेषु स्थापनम्
अष्टबन्धादिकं कुर्यात् स्थापनं नवलिङ्गकम् १
चतुर्विधं तु नैमित्यं शेषं नित्यार्चनादिकम्
प्रायश्चित्तोद्भुतं शान्तिं कुर्याद्द्वारादिमर्चनम् २
वत्सरे वत्सरे कुर्यात् स्थापयेच्चरदण्डकम्
परवेष्ट्यं तदग्रे तु मृदा दीन्मङ्कुरार्पणम् ३
यागशालात्प्रवेश्यादिन्सूर्यादहरयं गुरु
आरोहयेद्वरोहात्त्यं तीर्थस्नानाद्विसर्जनम् ४
द्वारादि ध्वजनैमित्त्य पक्षपर्वोत्समासके
अमने दृतुसंक्रान्तौ मासे उत्सवकाभ्यतः ५
द्वारादिनित्यकाम्यान्तं द्वारादिध्वजवत्सरे
द्वारादिनित्यनैमित्त्यं कारयेत्तु षडानन ६ श्रीः
नवनैमित्त्य वदमन्त्य कारयेत्तु नवालयम्
तत्तालये नवं लिङ्गं अष्टबन्धादिनिक्षिपेत्
उत्सवे द्विधिना कुर्यात् सर्वं नैमित्त्यमुच्यते ७
प्रति भा ध्वजदण्डं तु तद्दिने स्नपनं कुरु
नवसृष्ट्यादि कुर्वीत सर्वं नैमित्तिकादिभिः ८
स्थापनादृषिसिद्धादि उद्भवे लिङ्गसप्तकम्
नित्यकर्मणि द्वारादि परदण्ड ध्वजादिकम् ९
सर्वं द्वारादिनैमित्त्यं कारयेत्तु षडानन
भग्नचिह्ने तथा नित्य पतनं नाशकालिके १०
प्रायश्चित्तादिकं पूर्वं शेषं कर्म समाचरेत्
आगतं शुनिचण्डालदग्धे रुधिरकालिके ११
उत्पातदद्भुते काले न कुर्याद्दिवपूजनात्
प्रायश्चित्तादिकं कुर्याद्द्वारादीन्नित्यमर्चनम् १२

एवं यः कुरुते मन्त्री श्रूयतां तु षडानन ॥ श्रीः
इत्यनलागमे द्वारादिध्वजनैमित्तिकशतषष्टितमः पटलः